पार्श्वे यस्य निरीक्ष्य भीत इव त दुर्भिक्षमुख्य निजं
व्यापार कलिशत्रुरेप सकल तत्याज निर्व्याजत. ॥ ५ ॥

राणीरिति मृदुवाणी कान्ता जातास्य मेरुमूर्त्तिरिव ।
सन्नन्दना सुरमणी रमणी यामीष्टकल्पलता ॥ ६ ॥

चतु संख्यास्तयो पुत्रा. श्रीदा मोदरताः सुना ।
सद्दानवासनायुक्ता पुरुषोत्तममता श्रुता. ॥ ७ ॥

तेष्वाद्यो गुणवान्नियद्दरपुरे प्रोत्तुङ्गमाद्यार्हतो
य प्रासादमचीकरत्सविनयी गोविन्दसघाधिप. ।
द्वैतीयीकसुतोऽस्ति वीसल इति ख्यातस्तृतीय पुन-
र्विज्ञेष्वकुरसिंह इत्यथ गुणी तुर्यस्तु हीराभिध ॥ ८ ॥

श्रीमद्देउलवाटकेऽथ निवसन् श्रीलक्षभूमिपते-
र्मान्य. पुण्यवता सुवर्णमुकुट सघाधिपो वीसल ।
अस्ति स्वस्तिमयावदातचरितश्चातुर्यगम्भीरता-
सम्यक्त्वस्थिरतादिवन्धुरगुणश्रेणीमणी रोहण ॥ ९ ॥

यात्रा जैनविहारकारणगुरूपास्त्यादिपुण्यै सदा
गण्यैरार्हतशासन प्रतिदिन प्रोद्भासयन्नेकधा ।
नित्य सत्रगृहप्रवर्त्तितमहादानैरुदत्रार्युधै-
र्यो दुर्भिक्षविपक्षमक्षतजयोऽजैषीन्मनीषी क्षणात् ॥ १० ॥

शुद्धा शीलकला कलामिव विधोरीशोत्तमाङ्गस्थिता
के सघाधिपवीसलस्य सरला व्याख्या तु दक्षा अपि ।
मूर्ध्ना य कमनोपि निर्मितमनोरोधोवरोधो निज
मुक्त्वा जन्मत एव नान्यवनितासंसर्गमार्गं गतः ॥ ११ ॥

श्रीवर्मोत्कटमेदपाटसचिवश्रीरामदेवाङ्गजा
मेलादेविसमुद्भवाद्भुतल्सच्चातुर्यसी-दर्यभृत् ।
शीलश्रीकलिता सुधर्मनिरता लज्जागुणालङ्कृता
खीमाईरिति विश्रुतास्ति दयिता तस्य प्रशस्या गुणै ॥ १२ ॥

तस्यादिमः सकलधर्मधुराधुरीणो
धीराह्वयो निजकुलाम्बरपूर्णचन्द्रः ।
पुत्रोऽस्ति चम्पक इति प्रथितो द्वितीयः
पुत्री तु धर्मिणिरिति प्रथिताभिधाना ॥ १३ ॥

॥ इतश्च ॥

षट्तर्की परितर्ककर्कशधियः साहित्यविद्यापथे
पारीणप्रतिभातिनागमसरिन्नाथप्रथागस्तयः ।
त्रैलोक्याद्भुतभागधेयकलिताः सौभाग्यभृङ्गीवृता-
स्तत्तादृक्तपसा जितार्कमहसा देदीप्यमानाः सदा ॥ १४ ॥

उत्सर्गाचरणा विशुद्धचरणा मोहान्धकारारुणाः
पूज्या यत्र युगप्रधानतुलनामाबिभ्रते संप्रति ।
तेषा श्रीयुतदेवसुन्दर इति ख्याताभिधा शालिनां
सूरीन्द्राखिशिर-किरीटसदृशां श्रीसद्गुरूणा मुहुः ॥ १५ ॥

श्रीज्ञानं मोहनिद्राहरणदिनमणिः स्वर्मणिः प्रार्थितार्थे
निःश्रेणिः सिद्धवेश्मन्यरणिरथ परब्रह्मतेजः प्रकाशे ।
दानं तस्य प्रशस्याखिलसुखविभवोत्पत्तिहेतुः सदेति
व्याख्यामाकर्ण्य कर्णामृतरसमसमानन्दकंदाम्बुधाराम् ॥ १६ ॥

श्रीमच्छ्रार्थारत्नसमुच्चयाख्यं ग्रन्थं प्रवीणप्रतिभावगम्यम् ।
भक्तश्रुतेऽलेखयदेष भावाद्वर्षे हयर्तूदधिसोमसंख्ये ॥ १७ ॥

चतुर्भि. कालापकम् ॥

श्रीतत्त्वोद्यन्निधानः प्रकटनयपथो वीरमार्गानुगामी
मर्त्यामर्त्यैर्निषेव्य. श्रितनिखिलजनं प्रीणयत् राज्यलक्ष्म्या ।
श्रीधर्मः सार्वभौम परविजययुतो वर्द्धते यावदुर्व्यां
ग्रन्थो वाद्यमान. सकलकविकुलैस्तावदेषास्तु तुष्ट्यै ॥ १८ ॥

॥ शुभं भवतु ॥

संभूष्यं सदपत्यवत्परकाराद्रक्ष्यं च स्वक्षेत्रवत्
संशोध्यं व्रणिनोङ्गवच्च सततं वीक्ष्यं च सन्मित्रवत् ।
बध्यं वध्यवदश्लथं न हि च विस्मर्यं हरेर्नामवत
नैवं सीदति पुस्तकं किल कदाप्येतद्गुरूणां वचः॥ १ ॥ श्रीरस्तु ॥

---

No 238. A Commentary on Durgasinhavritti, by SARVADHARA [दुर्गसिंहवृत्तिटीका वाङ्मयप्रदीपनाम्नी—सर्वधरोपाध्याय].

Begins:

ओं नमो जिनाय ।

प्रणम्य शिरसा सर्वं सर्वज्ञं जगतां गुरुम् ।

स्याद्यन्तप्रक्रियां वक्ष्ये सविशेषां समासतः ॥ १ ॥

स्यादयः स्यामहिपर्यन्ता वर्त्तमानादयोऽर्थो आभिर्विभज्यते इत्यन्वर्थबलाद्विभक्तय उच्यन्ते । तत्र वर्त्तमाना । ति तस् अन्ति, सि थस् थ, मि वस् मस् ॥ ते आते अन्ते, से आथे ध्वे, ए वहे महे ॥

इत्युपाध्यायसर्वधरविरचितायां स्याद्यन्तप्रक्रियायां उविकरणापवादः ॥

इत्युपाध्यायसर्वधरविरचितायां वर्त्तमाना समाप्ता प० १३ ॥

इति वाङ्मयप्रदीपे पण्डितसर्वधरकृते परोक्षा समाप्ता प० ॥ ३९ ॥

Ends:

इति दौर्गसिंह्यां वृत्तौ तद्धितप्रकरणं लिखितं धर्मचन्द्रपाठकेन ॥

---

No 239. Durgasinhavritti with Dhundhaka [दौर्गसिंहीवृत्ति—ढुण्ढकसहिता].

Text begins

सिद्धो वर्णसमाम्नायः । सिद्धः खलु वर्णानां समाम्नायो वेदितव्यः न पुनरन्यथोपदेष्टव्य इत्यर्थः । सिद्धशब्दोऽत्र नित्यार्थो निष्पन्नार्थः प्रसिद्धार्थो वा । यथा सिद्धमाकाशं सिद्धमन्नम् । काम्पील्ये सिद्धो देवदत्त इति ।

Commentary begins:

सिद्धो वर्णसमाम्नायः । पिधूशास्त्रमाङ्गल्ययोः ।

Ends:

एवमन्येऽप्यनुसर्त्तव्याः ।

इति दौर्गसिंह्यां वृत्तौ तद्धितप्रकरणं समाप्तम् ॥ पं० देवसागरगणिनालेखि ॥

Commentary:

द्वारादीनां च । पदाद्योरपि । वृद्धिः ॥

इति दौर्गसिंह्यां वृत्तौ तद्धितप्रकरणढुण्ढकम् ॥ संवत् १४६७ वर्षे ---- १० तिथौ चंद्रे अनुराधानक्षत्रे चद्रगच्छे तपाभट्टारकश्रीपूर्णचंद्रसूरिपट्टे श्रीहेमहंससूरिभिः श्री ------ वृत्तिचतुष्कढुण्ढकं लिखित्वा पूर्णीकृतं देवमूर्त्तिगणिभणनार्थं चिरं नन्दतु ॥

---

**No 264. Advaitasiddhi,** by Madhusudana, with a commentary by Sadasukha [अद्वैतसिद्धेः प्रथमपरिच्छेदः—सटीक मू॰ मधुसूदन टीका नाम सारचन्द्रिका टी॰ सदासुख].

Commentary begins:

श्रीवंशीधरमिश्राणां गुरूणां चरणस्मृतिः ।
भूयान्मे साधिकेष्टानामनिष्टानां च बाधिका ॥ १ ॥
अद्वैतसिद्धिव्याख्यानं सदासुखेन धीमता ।
संक्षिप्तचन्द्रिकार्थेन क्रियते सारचन्द्रिका ॥ २ ॥

Text begins:

मायाकल्पितमातृतामुखमृषाद्वैतं प्रपञ्चाश्रयः ।

Text ends:

मम श्रुतिशतार्पिता तदहमस्मि पूर्णो हरिः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीश्रीचरणशिष्यश्रीमधुसूदनसरस्वतीविरचितायामद्वैतसिद्धौ सपरिकरप्रपञ्चमिथ्यात्वनिरूपणं नाम प्रथमः परिच्छेदः समाप्तः ॥ ॥

Commentary ends:

परिच्छेदस्याग्रिमस्य तमोघ्नी सारचान्द्रिका ।
शंभवे चित्प्रकाशाय दीपत्वेन मयाऽर्पिता ॥

इति श्रीमद्वदान्यशिरोमणेः श्रीमणीरामवर्मणो मनसादेव्यां लब्धजन्मना श्रीमन्निमलाञ्चीखचेतरामादधिगतनिर्मलस्वरूपेण श्रीमत्पण्डितजनावतंसश्रीवंशीधरमिश्रादधीतवेदान्तशास्त्रेण श्रीसदासुखधीमता लघुचन्द्रिकाया अद्वैतसिद्धिटीकाया उद्धृतायां सारचन्द्रिकायां प्रथमः परिच्छेदः समाप्तः ॥ १ ॥

---

No 277. Tattvapradipikatika, by PRATYAKSVARUPA—the second parichchheda [तत्त्वप्रदीपिका टीका—टी• नयनप्रसादिनी—प्रत्यक्स्वरूप]

Begins:

ॐ नमः श्रीशान्तिनाथाय यस्य क्रमनखांशवः ।
मोलौ दधति नम्राणां मङ्गलमक्षतश्रियम् ॥ १ ॥

एतेन कारणेन निष्क्रियस्य जीवस्य कथमीश्वरप्रेर्यत्वमित्यपि प्रत्युक्तम् ।

Ends.

द्वित्वादिर्जातिमानं द्यणुकपरिमितिपाकजप्रक्रियायो ?
हेतुत्वं कालकाष्ठे जनिमदष्टभिदा भेदवादो निरस्तः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यप्रत्यक्प्रकाशपूज्यपादशिष्यस्य प्रत्यक्स्वरूपभगवतः कृतौ तत्त्वप्रदीपिकायां टीकायां नयनप्रसादिन्या द्वितीयः परिच्छेदः ॥

द्वितीयेऽस्मिन् परिच्छेदे ग्रन्थसंख्या निगद्यते ।
- - - सहस्राणां षट् शतं च ततोऽधिकम् ॥ ३६०० ॥

शुभ भवतु लेखकपाठकयोः ॥

श्रीतपागच्छे पूज्य प० जिनविजयगणिशिष्य पं. विवेकविजयगणिभिः श्रीचिकोडे एषा प्रतिर्मुक्ता श्रीज्ञानभक्तया ॥

---

No 308 Sampradayanirupanam, by ANANTADEVA [संप्रदायनिरूपणम्— आपदेवसूनु अनन्तदेव ].

Begins :

श्रीगणेशायनमः । श्रीमद्गोपालाय नमः ।

सर्ववेदान्तसिद्धान्तसंप्रदायानुसारतः ।
नमस्कृत्य गुरून् वक्ष्ये प्रक्रियां- - - - - ॥ १ ॥
यच्छ्रीमद्रामतीर्थेभ्यः संप्रदायसमागतम् ॥
श्रुतं सत्तर्कसचिवं विविच्य तदिहोच्यते ॥ २ ॥

अखण्डमद्वितीयमानन्दैकरसं स्वप्रकाशं चैतन्यमेव जगतस्तत्वम् ॥

Ends.

धर्मावधीनां करुणानिधीनां श्रीमद्गुरूणां चरणावलंबात् ।
यत्संप्रदायश्रुतिमप्रहाय निरूपित तुष्यतु तेन विष्णुः॥ १ ॥
इत्येषा वाङ्मयी पूजा श्रीमद्गोपालपादयोः ।
अर्पिता तेन मे देवः प्रीयतां परमेश्वरः ॥

इति श्रीमदापदेवसूनुना अनन्तदेवेन कृतं संप्रदायनिरूपणं समाप्तम् ॥
॥ शुभमस्तु ॥

---

No 309. Siddhantatattvam, by ANANTA [सिद्धान्ततत्वम्—आपदेवसूनु-अनन्तदेव ]

Begins

सर्वशास्त्रार्थमर्यादापरीक्षणविचक्षणान् ।
वन्दे श्रीतातचरणान् श्रीकान्तचरणाश्रयान् ॥
श्रीरामतीर्थचरणस्मरणप्रसादतः ।
प्रस्थानत्रयसिद्धान्तसंप्रदाय. प्रदर्श्यते ॥ १ ॥
सिद्धान्ततत्वव्याख्यानव्याजेन विशदीकृतम् ।
वेदान्तसंप्रदायार्थं गृह्णन्तु ज्ञानकामिनः ॥ २ ॥
सम्यङ्निरूपितमिदं यदि नाद्रियन्ते
दुष्टा निकृष्टमतयो हृदि मत्सरेण ।

किंतावता ग्ररवतामरुचेर्न जातु
दुग्धस्य शुद्धमधुरस्य विदूषणं स्यात् ॥ ३ ॥

चिकीर्षितं प्रतिजानीते सर्ववेदान्तेति ।

Ends:

इत्थ प - - - - - - - पादश्रीरामतीर्थानुसृतिप्रसादात् ।
सिद्धान्ततत्वं गतवाग्विवादमनन्तदेवेन - - - - - ॥
इत्येषा वाङ्मयी पूजा श्रीमद्गोपालपादयोः ।
अर्पिता तेन मे देवः प्रीयतां परमेश्वरः ॥

इति श्रीसकल - - विश्रान्तयशोमण्डलनिखिलश्रुतिशिरस्तत्वपरिशीलन-मर्यादाधुरंधरश्रीमदापदेवसूनुना अनन्तेन कृतं - - - - मप्रकरणं समाप्तम् ॥

---

No 324. Anandalaharibhashyam, by MUKUTARAYA [आनन्दलहरीभाष्यम्—मुकुटराय]

Begins .

श्रीभगवत्यै नमः ।

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं
नचेदेवं देवो न खलु कुशलस्यन्दितुमपि ।
अतस्त्वामाराध्यं हरिहरविरिञ्च्यादिभिरपि
प्रणेतुं स्तोतुं वागयमकृतपुण्यः प्रभवति ॥ १ ॥

Ends:

हे भगवति वाचां जननि यत्तव स्तवनं मया कृतं मम वाक् न भवति त्वमेव समस्तजिव्हाग्रेषु वाग्रूपिणी । अत एव त्वदीयाभिः तव स्तुतिरेषा तेजोराशेः सूर्यस्य नीराजनम् । तथा समुद्रदेवतायाः सौहित्यजननं तर्पण-द्वारा तृप्तिं तृप्यमाना ममैषा स्तुतिः ॥

इति श्रीपदवाक्यप्रमाणअतिरात्रयाजीमहाभाष्यभट्टारकारविन्दलोचना-चार्यपुत्रश्रीरामकविडिण्डिममुगुटरायमहापाक्कनौ सौन्दर्यलहरीभाष्यलोचने

द्वितीयमुन्मीलनं संपूर्णम् । श्रीसौन्दर्यलहरीस्तोत्रटीका संपूर्णा । श्रीरस्तु ॥ शुभं भवतु ॥

---

No. 326. Kamasara, by KAMADEVA [कामसार—कामदेव]

Begins:

रतिपरिमलसिन्धुः कामिनीकेलिबन्धु-
र्विदितभवनमोदः सेव्यमानप्रमोदः ।
जयति मकरकेतुर्मोहनस्यैकहेतु-
र्विरचितबहु [बहु] सेवः कामिनीकामदेवः ॥ १ ॥
पद्मिनी चित्रिणी चैव संखनी हस्तिनी तथा ।
शशो मृगो वृषोऽश्वश्च स्त्रीपुंसोर्जातिरीरिता ॥ २ ॥

Ends:

एतान्बन्धान् परिज्ञाय सुखमासादयेत्पराम् ।
नारीणां दर्पसंघातं बन्धं कुर्यात्प्रियप्रदः ॥ ४१ ॥

इति श्रीकामदेवविरचिते कामसारे आसनबन्धनानिरूपण संपूर्णम् ॥

---

No. 327. Kavyakalpalatavritti, *by* S'UBHAVIJAYAGANI [काव्यकल्पलतावृत्तिमकरन्द—शुभविजयगणि]

Ends:

पुण्यनरदहचन्द्रा एते सहस्रमिता इत्यादि ॥

इति श्रीतपागच्छाधिनायकपातिसाहिश्रीअकब्बरप्रतिबोधदायकश्रीशत्रुंजयादितीर्थकरमुक्तिकारकभट्टारकश्रीहीरविजयसूरीश्वरशिष्यपण्डितश्रीशुभविजयगणिविरचिते काव्यकल्पलतावृत्तिमकरन्देऽर्थसिद्धिप्रतानप्रातसंख्यामूषकोद्योतकः षष्ठः प्रसरः । - - -

स्वस्ति श्रीमत्तपागच्छस्वर्गिगच्छनवाम्बुदाः ।
अनेकसत्वसम्यक्त्वप्रतिलम्भैकलम्भकाः ॥ १ ॥

देशनातिशयाद्बोधीकृतश्रीमदकब्बराः ।
षाण्मासिकामार्यकरमोचनादिविधायकाः ॥ २ ॥

अभूवन् भुवनोद्भासियशसः प्रशमाव्ययः ।
श्रीहीरविजयाह्वानसूरयो गुणभूरयः ॥ ३ ॥

तत्पट्टकमलारामविभासनविभाकराः ।
दिल्लीपतिसभावासवादिवादजयप्रथाः ॥ ४ ॥

औदार्यधैर्यगाम्भीर्याद्यनेकगुणभूमय ।
श्रीमद्विजयसेनाख्यसूरय. सन्ति सम्प्रति ॥ ५ ॥

तत्पट्टहाटकक्ष्माभृद्भूमिकल्पद्रुमोपमाः ।
यौवराज्यपदप्रष्ठाः प्रहृष्टवदनाम्बुजाः ॥ ६ ॥

श्रीमद्विजयदेवाह्वसूरय. सुरसूरय. ।
इय प्रज्ञाप्रकर्षेण जयंति जगतीतले ॥ ७ ॥

एषां श्रीसूरीणां प्रसादमासाद्य विगतदोषाणाम् ।
श्रीमत्सलेमसाहि राज्ये शुभविजयमेधावी ॥ ८ ॥

श्रीहीरविजयसूरीश्वरचरणाम्भोजसेवनप्रवण. ।
रसरसरसशशलक्ष्मप्रमिते श्रीविक्रमाद्वर्षे ॥ ९ ॥

श्रीकाव्यकल्पलतिकावृत्तिमकरन्दनामधेयेन ।
श्रीविजयदेवसूरीश्वरनिर्देशादहमकार्षम् ॥ १० ॥

श्रीमन्तो वाचकश्रेष्ठाः कल्याणविजयाभिधाः ।
जयति जगता पूज्याः सुधर्मस्वामिसन्निभाः ॥ ११ ॥

तत्पादपद्मरोलम्बसन्निभैर्वाचकोत्तमै. ।
श्रीधर्मविजयाह्वानै. शोधिता नन्दताच्चिरम् ॥ १२ ॥

ततश्च पण्डितोत्तसमेरुविजयकोविदाः ।
तच्छिष्यैः शोधिता प्राज्ञलावण्यविजयाभिधै. ॥ १३ ॥

यत्किंचिद्भवति क्षूण राभस्यादिवशादिह ।
प्रेक्ष्या चक्षुष्मता मुद्दये शोध्य तदुपकारिभिः ॥ १४ ॥

पुष्पदन्ताविमौ यावदुदयेते नभस्तले ।
वृत्तिस्तावदियं जीयाद्वाच्यमाना विशारदैः ॥ १९ ॥

इति श्रीतपागच्छाधिनायकपातसाहिश्रीअकब्बरमतिबोधदायकतत्प्रदत्त-जगद्गुरुबिरुदधारकपण्मासादवधिसकलजन्तुजाताभयदानदायकश्रीशत्रुंजयरैवतकाचलकरमुक्तिकारकभट्टारकश्रीश्रीहीरविजयसूरीश्वरचरणसेविपण्डित-श्रीशुभविजयगणिना श्रीहीरविजयसूरीश्वरपट्टोदयाद्रिशिरःशेखरायमाणसंप्रति-विजयमानश्रीविजयसेनसूरीश्वरपट्टविभूषणगतदूषणाचार्यश्रीविजयदेवसूरीश्वर-निर्देशाद्विरचिते काव्यकल्पलतावृत्तिमकरन्देऽर्थसिद्धिप्रतानप्राप्तसमस्यास्तवकोद्योतकः सप्तदशः समाप्तः तत्समाप्तौ च समाप्तोऽर्थसिद्धिप्रतानस्तत्समाप्तौ च समाप्ताश्चत्वारः प्रतानास्तत्समाप्तौ च समाप्तोऽयं काव्यकल्पलतावृत्तिमकरन्दनामा ग्रन्थः ॥

संवत् बाणतर्कदर्शनविधुमितं १६६५ वर्षे चातुर्मासिकमासीनानूचानपरंपरापौलोमीमाणनाथसनाथश्रीविजयदेवसूरीश्वरचलननालिनरजःपुञ्जपुण्यीकृते श्रीराजनगरे आश्विनसितपष्ठ्यां दिवसपतिदिवसे मूलनक्षत्रे मूलाका सिद्धियोगे दैवसिककसौभाग्यनाम्नि योगे इति भद्रम् ॥ इति काव्यकल्पलतिकावृत्तिमकरन्दनाम्नी संपूर्णा ॥ ग्रंथाग्रम् । ३१९६ ॥

---

**No 354** Ramasatakam, by SOMESVARA, with a Commentary [रामशतकं सटीकम्—मू सोमेश्वर—टी०].

Commentary begins

रामचन्द्रं प्रणम्यादौ सानुजं जानकीपतिम् ।
रामशतस्य व्याख्येयं क्रियते बालबोधिनी ॥ १ ॥

Text begins:

उद्धर्त्तासौ धरित्रीभरमिति भुजगाधीश्वरो वंशवृद्धि· ।

Text ends:

विश्वंभरामण्डलमण्डनस्य श्रीरामभद्रस्य यशःप्रशस्तिम् ।

चकार सोमेश्वरदेवनामा यामार्द्धनिष्पन्नमहाप्रबन्धः ॥ १०१ ॥

इति रामशतकं सपूर्णम् ॥

Commentary ends

विश्वमरामण्डलमण्डनस्य भूमण्डलाभरणस्य ॥ १०१ ॥

इति श्रीरामशतककाव्यविवरण संपूर्णम् ॥

---

No 362 Sringarakallola, by RAYABHATTA [शृङ्गारकल्लोल—रायभट्ट]

Begins:

अनुनयति गिरीशे द्राक्परावर्तिताङ्ग्याः
स्फटिकभवनभित्तौ तन्मुखेन्दु समीक्ष्य ।
पुनरभिवलिताया विस्मयस्मेरमुग्ध्याः
जयति गिरिसुतायाः कोपि दृष्टिप्रसादः ॥ १ ॥

Ends

गुम्फो वाचा मसृणमधुरो मालतीनामिव स्या-
द्यों वाच्य. प्रसरणपर सम्मितः सौरभस्य ।
भावव्यङ्ग्यो रस इव रसस्तद्विधाह्लादहेतु-
र्मौलिन्यासौ सुकविरचना कस्य भूषा न धत्ते ॥ १०४ ॥

इति श्रीमहाकविपण्डितश्रीमद्रायभट्टकृत शृङ्गारकल्लोलं नाम काव्यं संपूर्णम् ॥ ॥ सवत् १६९८ वर्षे श्रावणशुदि ९ भौमे लिखितम् ॥ ॥

---

No 356 Lavanyalahari, by KESAVABHATTA [लावण्यलहरी—केशवभट्ट]

Begins

मुकुन्दब्रह्मेन्द्रप्रभृतिकवयो यत्र चकिता.
क तत्रार्वाचीन' प्रभवति भवत्या स्तुतिविधौ ।
तथाप्यस्मिन्नर्थे वितरसि मतिं मादृशि जने
न जाने पुण्यानां मम जननि केशा विल्सितम् ॥ १ ॥

Ends:

श्रीलौगाक्षिकुलारविन्दतरणिर्माध्यन्दिनाम्नायवि-
न्मीमांसायुगतर्कतन्त्रचतुरः साहित्यरत्नाकरः ।
दुर्गायाः स्तुतिमाततान सुकृती गोदातटे प्रोल्लस-
त्पुण्यस्तंभनिवासिकेशवसुतानन्तात्मजः केशव ॥ १३० ॥

इति श्रीमत्सकलपण्डितशिरोमणिभट्टकेशवसुतानन्तभट्टसुतकेशवभट्ट-रचिता लावण्यलहरी ॥

संवत् १७०७ वर्षे शाके १५७३ प्रवर्त्तमाने अद्येह श्रीआश्विनमासे शुद्धपक्षेऽष्टम्यां तिथौ रविवासरे श्री० गदाधरसुतजयरामेण लिखितोऽयं ग्रन्थः ॥

---

No 370 Alankaratilaka, by BHANUDATTA [अलङ्कारतिलक — भानुदत्त.]

Begins.

सोऽयं मे मुदमादधातु भगवान् कोलावतारो हरिः
सिन्धोः क्लेशमपास्य यस्य दशनप्रान्ते स्थिताया भुवः ।
तारा हाराति वारिदस्तिलकति स्वर्वाहिनी माल्यति
क्रीडा दर्पणाति क्षपापतिरहर्देवश्च ताटंकति ॥ १ ॥
उरस्फुरदलंकारचमत्कारपटुश्रियः ।
तनोति तिलकं भाले भारत्या भानुसत्कविः ॥ २ ॥

अपूर्णम्

---

No 371. Kavyadarpana [काव्यदर्पणम्].

Begins

श्रीगणेशाय नमः ।

कामदं नीलशैलस्थं करुणावरुणालयम् ।
शरणं सर्वसत्वाना श्यामलं धाम कामये ॥ १ ॥
माननीयं मुनीन्द्राणां मतमालोक्यमुत्तमम् ।
कवीनां कौतुक कर्तुं क्रियते काव्यदर्पण. ॥ २ ॥

अत्रोदाहरणं सर्वं श्रीकृष्णचरणाङ्कितम् ।
यद्वर्णनं तदप्युक्तं काव्ये कृष्णविनोदने ।
धर्मार्थकाममोक्षाणां प्राप्तिर्भवति काव्यतः ॥ ३ ॥
अतो हेतोर्यथाबुद्धि तत्स्वरूपं निरूप्यते ।
गुणाभिव्यञ्जकैर्वर्णैर्युतावस्फुटदूषणौ ॥ ४ ॥
शब्दार्थौ काव्यलंकाररहितौ काव्यमस्यतु ।
आत्माध्वनिः परं वाच्यापेक्षयाह्लाददायिनि ॥

Ends:

कृतकाव्यपरीक्षेयं कवीनां कौतुकावहा ।
आर्या (विगतमात्सर्याः) सानुकंपं विचार्यताम् ॥

इति श्रीकाव्यदर्पणे दोषनिर्णयः सप्तमः परिच्छेदः समाप्तिमगात् ॥

संवत् १८२२ शके १६८८ प्रवर्त्तमाने मासोत्तमे मासे ज्येष्ठमासे धवल-पक्षे नवम्यां चन्द्रवासरे लिखितमिदं पुस्तकम् । अटग्रामे मोढज्ञातिभ० मीठासुतजगदीशेन लिखितम् ॥

---

No. 373 Kavyadarsatika, by HARINATHA [काव्यादर्शटीका-मार्जनम्—त्रिभुवनात्मजहरिनाथमहोपाध्याय]

Begins:

श्रीगणेशायनमः ॥ श्रीगुरुभ्योनमः ॥

गिरीशव्रतदेहार्द्धो गिरीशाल्पसमृद्धये ।
गिरिशरीरे बिभ्राणां गिरीशतनयां नुमः ॥ १ ॥

किञ्चिच्चेलाञ्चलविगलनोद्वले राधिकायाः
सव्रीडायाः सपदि विहिते वक्षसंक्षिप्तमात्रः ।
पायादस्मानभिनवसुधाक्षालितो नन्दसूनो-
र्यीलोद्वेल्लकुवलयवनीकोमलो दृष्टिपातः ॥ २ ॥

साम्ना सुवर्णदानेन भेदाद्विगृहीतोऽपि वा ।
उद्धृतोऽपि कठरोपि मया दण्डी साध्यते ॥ ३ ॥

तातं विश्वधरं नत्वा ज्यायांसं केशवं गुरुम् ।
भानोरवरजेनायं प्रक्रमः क्रियते मया ॥ ४ ॥
दुर्बोधपदसंधाननिकाममलिनात्मनः ।
क्रियते हरिनाथेन काव्यादर्शस्य मार्जनम् ॥ ५ ॥
विशिष्टशिष्टाचारानुमितकर्त्तव्यताकं समुचितेष्टदेवतास्मरणम् ॥

Ends.

कविपण्डितमूर्द्धन्यश्रीविश्वधरजन्मनः ।
कृतौ श्रीहरिनाथस्य परिच्छेदस्तृतीयकः ॥
द्रोहेण वा स्नेहवशेन वापि स्वभावतः सज्जनदुर्जनाभ्याम् ।
दोषाय वा तस्य निराक्रियायै कृतिर्मदीया परिभावनीया ॥

श्रीराधावल्लभो जयति । इति महामहोपाध्यायविश्वधरात्मजमहामहोपाध्यायश्रीकेशवानुजमहोपाध्यायश्रीहरिनाथकृतौ काव्यादर्शमार्जने तृतीयः परिच्छेदः । श्रीराधावल्लभसहायोऽस्ति ।

संवत् १७४६ वर्षे वैशाखद्वितीयबदि १३ सोमे लिखितं भ० गङ्गारामेण यादृशम् ।

---

No. 375. Mugdhamedhakara by RATNAMANDANAGANI [ मुग्धमेधाकर —रत्नमण्डनगणि ]

Begins:

वर्ण्यं वर्णादिभिस्तुल्यं वस्तु वीक्ष्योपमादिभि. ।
औचित्यैश्चादितद्धर्मानादायार्थं सुधीः सृजेत् ॥ १ ॥
उपमारूपकोत्प्रेक्षापह्नुतिभ्रान्तिसंशयाः ।
स्मृत्याक्षेपव्यतिरेकाः सामान्योन्मीलिते च ते ॥ २ ॥
उपमानेन सादृश्यमुपमेयस्य यत्र सा ।
प्रत्ययाव्ययतुल्यार्थसमासैरुपमा यथा ॥ ३ ॥
यत्र वर्द्धितरागसागरतया राकामृगाङ्कायते
धत्तः शोणिमबन्धुरत्वमधरो बन्धूकपुष्पे इव ।

उत्तुङ्गौ विमृतः कुचाविभविभोः कुम्भद्वयीविभ्रमं
यस्यास्तां विरलोऽरविन्दनयनां ज्ञातुं विभुर्वल्लभाम् ॥ ४ ॥

Ends:

शंकुः कन्दरमञ्जरीमदमहद्रीचीन्द्रमित्यादिक-
श्लाघार्थध्वनिगर्भगुम्फसुभगं काव्यं मुखे मण्डनम् ॥ ९४ ॥

इति मण्डनाङ्को मुग्धमेधाकरालंकारः। पण्डितप्रकाण्ड पं० रत्नमण्डन-गणिपुंगवैर्विहितः स्वपरोपकाराय ॥ ॥

---

No. 422. Padyapanchasika, by Kavindra [पद्यपञ्चाशिका—कवीन्द्रः].

Begins:

कस्तूरीकोशभासः कमलदलदृशः कौस्तुभाङ्कः कृपालुः
कालिन्दीकूलकेलिः कुलिशकरकृतिः कामिनीकण्ठमालः।
कंसारिः कैटभारिः कलिकुलकदनः क्षीणपापां करालः
कल्पस्थाणुः कवीनां कलयतु कुशलं केशवः केशिकालः ॥ १ ॥
नत्वा कृष्णाङ्घ्रियुग्मं परमपदकरं रम्यराजीवरूपं
विश्वोत्पत्त्यैकबीजं भवभयहरणं कामधेनुं कृपालुम्।
काशिस्थो गौडविप्रो हरिहररसिकः सेवकः सज्जनानां
कुर्वे सिद्धान्तसारं मुनिमनुजमतं पद्यपञ्चाशकीयम् ॥ २ ॥

Ends:

जीवो वा भार्गवो वा परमबलयुतः कामभावेषु यासां
कर्मेशो धर्मलाभे तनुसुखतनये कर्मकोशे बलस्थः।
तासां चन्द्राननानां कमलदलदृशां नायका रूपयुक्ता
राजन्ते राजलक्ष्मीर्मणिमयरुचिरे दीप्तिभावे सदैव ॥ ४ ॥

इति कवीन्द्रविरचिता पद्यपञ्चाशिका समाप्ता ॥ ॥ संवत् १८७४ शाके १७३९ ॥

---

No 424 **Paitamahi**, by MADHUSUDANA, with a commentary by GOPIRAJA [पैतामही सभाष्या मू मधुसूदन टी गोपीराज.]

Begins:

श्रीगणेशायनम. ।

जयति जगति शश्वच्छूलपाणि कपाली
---------लिदेशे प्रसन्न ।
धवलवृषभगामी पञ्चवक्त्रोऽहिभूष-
स्तुहि नागे---------नेत्र ॥ १ ॥

विघ्नेशमाद्य प्रणिपत्य मूर्ध्ना गुरु तथा श्रीमधुसूदनाख्यम् ॥
श्री--रावो ननु धर्म--पैतामहीभाष्यमह करोमि ॥ २ ॥

Ends:

आसीत्पार्थपुरे वरे द्विजवर श्रीगोपीराजाभिध
सिद्धान्ताभिनवोद्यमैककुशलो दैवज्ञचूडामणि ।
तज्ज श्रीपतिरग्रणीः कृतविधौ सिद्धान्तपार गत-
स्तत्सूनुर्मधुसूदनाख्यगणक पैतामहीं निर्ममे ॥ ----

गङ्गातीरनिवासिपार्थिवपुरे श्रीरामकृष्णात्मजो
भारद्वाजकुलेऽभवत्सुगणक श्रीगोपीराजाभिध ।
तन्न कल्पत ---कारसुलभ यो मर्त्यलोके तथा
दैवज्ञप्रतिकण्ठभूषणमल स ------

---

No 438 **Lilavatitika** by LAKSHMIDASA [लीलावतीटीका—लक्ष्मीदास].

Begins

श्रीगणेशाय नम ।

नत्वा लक्ष्मीकान्त लक्ष्मीदासो गिर गुणाधीशम् ।
विवृणोति गणितलीलावतीं समालोच्य पूर्वकृती ॥ १ ॥

शिष्टा -- ग्रन्थारंभे प्रत्यूहसमूहव्यपोहायाभीष्टदेवतानमस्कारपूर्वकं संवन्धप्रयोजनाभिधान कुर्वन्ति ॥

Ends:

यं प्रोता ---- शुचिमातिः श्रीमांश्च वाचस्पति-
र्लक्ष्मीदासममाणि तेन गणिते यस्तत्वचिन्तामणिः ।
तत्खण्डे विशदे विशेषसहिते लालित्य लीलावती-
व्याख्याने विमलोऽकपासगणिताध्यायः समाप्तिं गतः ॥

इति श्रीमद्वाचस्पतिमिश्रसूनुलक्ष्मीदासविरचिते भास्करीयगणितपाटीलीलावतीव्याख्यानेऽकपासाध्यायः समाप्तः ॥ संवत् १७२८ वर्षे द्वितीयवैशाखसुदि प्रतिपद्दिने शुक्रवारे विनयविमलेन स्वयमालेखि आत्मपठनार्थम् । शुभं भूयात् ॥

---

No. 445. Samvitprakasa, by GOVINDA [संवित्प्रकाश —गोविन्दकवीश्वर]

Begins:

श्रीमद्विष्णुममेयशक्तिमखिलाकल्पं किरीटाङ्गद-
द्योतत्कुण्डलमुद्यदर्करुचिर पीताम्बरं हारिणम् ।
पद्मस्थं हृदयस्थकौस्तुभमणिं हस्तस्थचक्रोल्लस-
च्छङ्खाम्भोजगदं मुदं विदधतं भक्त्या भजेऽभीष्टदम् ॥ १ ॥

Ends:

काह्नकवीश्वरनन्दनगोविन्दकवीश्वरेण निर्णीते ।
संवित्प्रकाशकाव्ये विजयादिविदा चतुर्दशः सर्गः ॥ १४ ॥

श्रीगोविन्दकवीशमीशभजनप्राप्तं चकुपुशाग्रणीः
श्रीमत्काह्नकवि· सुतं प्रसुषुवे श्रीकर्मदेवी च यम् ।
वेदान्तां व्रज भास्वतार्थवहुलं संवित्प्रकाशाभिधं
काव्य तेन नून समाप्तिमगमद्विद्वज्जनानन्दनम् ॥ १९ ॥

इति श्रीसंवित्प्रकाश· समाप्तः ॥

---

**No. 460** Atankadarpana, by VACHASPATI [माधवनिदानटीका—आतङ्कदर्पणनाम्नी—वाचस्पति].

Begins:

श्रीमहागणाधिपतये नमः। श्रीगुरवे नमः। अधुनाऽतंकदर्पणो लिख्यते॥

तुलसीकुसुमं दधत्तमालं बल्लविगोपवासमक्तम्।
किमपि त्रिभुवनैकमूलकन्दं परमानन्दमहमहो स्मरामि॥ १॥

श्रीहम्मीरनरेश्वरः समभवद्विरः प्रतापानल-
ज्वालाजालकरालदग्धयवनप्राग्भारशुष्केन्धनः।
यस्य प्रौढसमाङ्गणेष्वपि यशः स्वर्लोककल्लोलिनी-
कल्लोलामलमङ्गनाः सुमनसां गायन्ति रोमाञ्चिताः॥ २॥

प्रत्यर्थं क्षितिनाथसार्थवनितावैधव्यदीक्षागुरोः
शौर्यं यस्य रणाङ्गणे सुरगणैः पश्यन् सुराणां पतिः।
लब्ध्वा नेत्रसहस्रकं फलमलं स्मृत्वा निजाभ्यर्थितं
रामं रावणघातिनं समभवत्तुष्टोविलक्षः पुनः॥ ३॥

तस्याभवद्दैवरः प्रभूनो विश्वासपात्रं विदितश्चरित्रैः।
प्रमोदनामा सकलप्रमोदी कलाविलासैकनिधिर्द्विजेन्द्रः॥ ४॥

ज्येष्ठोऽभवत्तस्य सुतः प्रशस्तः शास्त्रार्थवेत्ता शिवशक्तिचेताः।
रैशर्मनामा प्रथितः कलाभिर्महम्मदक्षोणिपतेः सभायाम्॥ ५॥

अन्योऽपि तस्यास्ति सुतः कनीयान्वाचस्पतिः सत्वगुणैकसंगतिः।
सहोदराः प्रीततमाः समस्तायुर्वेदविद्या स्वयमध्यगीयत॥ ६॥

भृगुवचनविचारैश्चारुचञ्चच्चरित्र
चरकचतुरचेताः सुश्रुते सुश्रुतो य।
कपिलमिव ययस्मै ब्रह्मविद्यारहस्ये
प्रकटितपटुबुद्धिर्वैद्यकाणादसिद्धिः॥ ७॥

तेनोज्ज्वला विवृत्तिरल्पधिया हिताय
संवध्यते विबुधमाधवसग्रहस्य।

विज्ञाय तार्किकवरैकविचारवेद्यं
वैधर्म्यगुम्फनपराम्मधुकोशवन्धम् ॥ ८ ॥

ग्रन्थारम्भे प्रारब्धग्रन्थपरिसमाप्त्यर्थं ग्रन्थश्रोतॄणामपि प्रत्यूहव्यूहव्युदासार्थं शिष्टाचारपरिपालनार्थं च ग्रन्थकारः प्राग् विशिष्टदेवताप्रणामं निबद्धवान् ॥

प्रणम्य जगदुत्पत्तिस्थितिसंहारकारणम् ।
स्वर्गापवर्गयोर्द्वारं त्रैलोक्यशरणं शिवम् ॥ १ ॥

नानामुनीनां वचनैरिदानीं समासतः सद्भिषजां नियोगात् ।
सोपद्रवारिष्टनिदानलिङ्गो निबध्यते रोगविनिश्चयोऽयम् ॥ २ ॥

युग्मम् ।

Ends;

सुभाषितं तत्र यदस्ति किञ्चित् तत्सर्वमेकीकृतमत्र यत्नात् ।
विनिश्चयेत्सर्वरुजां नृणां वा यन्माधवेनेन्दुकरात्मजेन ॥

यत्कृतं सुकृतं किञ्चित् कृत्वैनं रुग्विनिश्चयम् ।
मुञ्चन्तु जन्तवस्तेन नित्यमातंकसन्ततिम् ॥

इत्यातंकदर्पणे निदानव्याख्यायां विषनिदानं समाप्तम् । शुभं भूयात् । संवत् १८४१ मितिः माघसुदि १४ चन्द्रे लिखितं पूर्णतामागात् । लिखापितं वैद्यचन्द्रभानुनाम्ना ॥ शुभं भूयात् ।

लिखितेन निदानेन माधवेनैव माधवः ।
प्रीयतां गोकुलेशश्च स्वर्गवैकुण्ठदः प्रभुः ॥

श्रीमद्गोकुलनाथस्य पदौ नत्वा प्रसन्नधीः ।
दर्शनानन्दसुखतो नैति पाप्यपि दुर्गतिम् ॥

कृष्णः कृष्णसखो मह्यं प्रीयतां कृष्णयावृतः ।
कृष्णभक्तः सदा देवः सर्वं पायाज्जगत्प्रभुः ॥

---

No 500 Mantrachandrika by KASINATHA [मन्त्रचन्द्रिका—काशीनाथ]

Begins:

श्रीगणेशाय नम । श्रीदक्षिणामूर्तिगुरुभ्यो नम ।

विश्वेश्वरं नमस्कृत्य मातरं पितरं तथा ।
काशीनाथ प्रतनुते सिद्धिदां मन्त्रचन्द्रिकाम् ॥

तत्रादौ गुरुलक्षणम् । श्रोत्रियो ब्रह्मनिष्ठ । तत्वप्रतिपादनसमर्थ ॥

Ends:

विश्वेश्वरीं विशालाक्षीं ढुंढिराज च माधवम् ।
दण्डपाणिं कालराज स्मरन् सिद्धिमवाप्नुयात् ॥

इति श्रीमद्भट्टोपनामकशिवरामभट्टाङ्गजजयरामभट्टाभिधशिवभक्तसूनुमन्त्रशास्त्रप्रवीणदक्षिणाचारमतप्रवर्त्तककाशीनाथविरचिता मन्त्रचन्द्रिका समाप्ता । श्रीदक्षिणामूर्तिशिवार्पणमस्तु ॥

---

No 510 Ramarchanachandrika by ANANDAVANA [रामार्चनचन्द्रिका—आनन्दवन]

Begins:

तर्तुं सद्गतिवारिधिं त्रिजगतां नौर्नाम यस्य प्रभो-
र्येनेदं सकलं विभाति सततं जातं स्थितं सहलम् ।
यश्चैतन्यघनप्रमाणविदुरो वेदान्तवेद्यो विभु-
स्तं वन्दे सहजप्रकाशममलं श्रीरामचन्द्रं परम् ॥ १ ॥

Ends:

असौ सर्वभूतान्तरात्मा रामचन्द्र प्रचोदयात् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमन्मुकुन्दश्रीचरणशिष्यानन्दवनविरचितायां श्रीरामार्चनचन्द्रिकायां चतुर्थ पटल ॥ १४ ॥

॥ समाप्तेयं श्रीरामार्चनचन्द्रिका ॥ सपूर्ण चतुर्थपटलम् ॥

---

No. 546. Ashtasahasrivivaranam, by YASOVIJAYA [अष्टसहस्रीविवरणम्—यशोविजयः].

Begins:

ऐंद्रमहः प्रणिधाय न्यायविशारदयतिर्यशोविजयः ।
विषमामष्टसहस्रीमष्टसहस्र्या विवेचयति ॥ १ ॥

सिताम्बरशिरोमणिर्विदितचारुचिन्तामणि-
र्विधाय हृदि रुच्यतामिह समानतन्त्रे नये ।
अनर्गलसमुच्छलद्बहलतर्कवर्णोदक-
च्छटाभिरयमुत्सवं वितनुते विपश्चित्कुले ॥ २ ॥

स्याद्वादार्थः क्वापि कस्यापि शास्त्रे यः स्यात्कश्चिद्दृष्टिवादार्णवोत्थः ।
तस्याख्याने भारती सस्पृहा मे भक्तिव्यक्तेर्नाग्रहोऽणौ पृथौ वा ॥ ३ ॥

अम्भोराशेः प्रवेशे प्रविततसरिता सन्ति मार्गा इवोच्चैः
स्याद्वादस्यानुयोगे कति कति न पृथक् संप्रदाया बुधानाम् ।
शक्यः स्वोत्प्रेक्षितार्थैरुचिविषयता तत्र नैकोऽपि नेतुं
जेतुं दुर्वादिवृन्दं जिनसमयविदः किं न सर्वे सहायाः ॥ ४ ॥

समन्तभद्रोऽत्र हि कारिकाणां कर्ता तु वक्ता त्वकलङ्कदेवः ।
व्याख्याति भाष्यानुगमेन विद्यानन्दोऽप्यमन्दोद्यमनः स्फुटं ता. ॥ ५ ॥

श्रेय इति अलंकरणे इत्यत्रन्वयि । श्रीवर्द्धमानस्येति ॥

Ends:

ज्ञानेन्यहेतुश्च निजप्रसादात् ॥

इति श्रीमदकबरसुरत्राणप्रदत्तजगद्गुरुविरुदधारकभट्टारकश्रीहीरविजयसूरीश्वरशिष्यमुख्यमहोपाध्यायश्रीकल्याणविजयगणिशिष्यावतंसपण्डितश्रीलाभविजयगणिशिष्याग्रेसरपण्डितश्रीजीतविजयगणिसतीर्थ्यालङ्कारपण्डितश्रीनयविजयगणिचञ्चरीकचरणकमलेन पण्डितश्रीपद्मविजयगणिसहोदरेण महोपाध्यायश्रीयशोविजयगणिना विरचिते अष्टसहस्रीविवरणे दशमः परिच्छेदः ॥ १० ॥

---

No. 548 Acharapradipa by RATNASEKHARA [आचारप्रदीप —रत्नशेखरसूरि ]

Begins

प्रणम्य पार्श्वनाथस्य पङ्कज सर्वसौख्यदम ।
समस्तमङ्गलश्रेणीरताप्रबलतावृतम् ॥ १ ॥

Ends

वीर्याचारविचारचारिमचण सवेगरङ्गोल्वण-
प्राणिश्रोत्रसुधाभिवर्पनिपुण पुण्यक्रियोत्सर्पण ।
श्रीसूरीश्वररत्नशेखरगुरूत्तसे प्रकाशीकृते
शास्त्रेऽस्मिन्निति पञ्चम समजनि श्रीमान् प्रकाश स्फुट ॥ १ ॥

इति तपागच्छनायकश्रीसोमसुन्दरसुनिसुन्दरसूरिपट्टप्रतिष्ठितश्रीरत्नशेखरसूरिविरचिते श्रीआचारप्रदीपे पञ्चम प्रकाश ॥ ॥

विख्याततपेत्याख्या जगति जगच्चन्द्रसूरयोऽभूवन् ।
श्रीदेवसुन्दरगुरूत्तमाश्च तदनुक्रमाद्विदिता ॥ १ ॥
पञ्च च तेषा शिष्यास्तेष्वाद्या ज्ञानसागरा गुरव ।
विविधा च चूर्णिलहरिप्रपठनत सान्वयाह्वाना ॥ २ ॥
श्रुतगतविविधालापकसमुद्धृत समभवश्च सूरीन्द्रा ।
कुलमण्डना द्वितीया श्रीगुणरत्नास्तृतीयाश्च ॥ ३ ॥
षट्दर्शनवृत्तिक्रियारत्नसमुच्चयविचारनिचयसृज ।
श्रीभुवनसुन्दरादिषु भेजुर्विद्यागुरुत्व ये ॥ ४ ॥
श्रीसोमसुन्दरगुरुप्रवरास्तुर्या अहार्यमहिमान ।
येभ्य सततिरुच्चैर्भवति द्वेधा सुधर्मभ्य ॥ ५ ॥
यतिजितकल्पविवृत्तेश्च पञ्चमा साधुरत्नसूरिवरा ।
यैर्मादृशोऽप्यकृष्यत करप्रयोगेण भवकूपात् ॥ ६ ॥
श्रीदेवसुन्दरगुरो पट्टे श्रीसोमसुन्दरगणेन्द्रा ।
युगवरपदवीं प्राप्तास्तेषा शिष्याश्च पञ्चैते ॥ ७ ॥

मारीसत्रमनिराकृति सहस्रनामस्मृतिप्रभृतिकृत्ये ।
श्रीमुनिसुन्दरगुरवश्चिरतनाचार्यमहिमभृत ॥ ८ ॥
श्रीजयचन्द्रगणेन्द्रा निस्तन्द्रा' सघगच्छकार्येषु ।
श्रीभुवनसुन्दरवरा दूरविहारैर्गणोपकृतः ॥ ९ ॥
विषममहाविद्यातद्विडम्बनाब्धौ तरीव वृत्तिर्यै ।
विदधे यज्ज्ञाननिधिं मदादिशिष्या उपाजीवन् ॥ १० ॥
एकाङ्गा अप्येकां दशाङ्गिनश्च जिनसुन्दराचार्या. ।
निर्ग्रन्था ग्रन्थकृत श्रीमज्जिनकीर्तिगुरवश्च ॥ ११ ॥
एषा श्रीसुगुरूणा प्रसादन' षट्कुतिथिमिते १९१६ वर्षे ।
जग्रन्थ ग्रन्थमिम सुगम श्रीरत्नशेखर सूरि ॥ १२ ॥
अत्र गुणसत्रविज्ञावतसजिनहसगणिवरप्रमुखै ।
शोधनलिखनादिविधौ न्यधायि सानिध्यमुद्युक्तै ॥ १३ ॥
प्रत्यक्षर निरीक्ष्यास्य विपश्चिद्भिर्विनिश्चिता ।
पञ्चपष्ठ्यधिकाऽनुष्टुप्सहस्राणा चतुष्टयी ॥ १४ ॥
तच्छोधयन्तु सुधियो यन्मतिमान्द्यादवद्यमुदितमिह ।
ग्रन्थोऽय चिरसमय जयताज्नयदायश्च विदाम् ॥ १५ ॥

इत्याचारप्रदीपग्रन्थ । सङ्ख्या ४०६५ सपूर्णा ॥ सवत् १६९९ वर्षे वैशाखवदि १४ रवौ अद्येह श्रीपत्तने जोसीमीमजीलिखित ॥ श्रीशुभ भवतु ॥ कल्याणमस्तु ॥

---

No 554 Upamitibhavaprapanchakathasaroddhara by DEVENDRASURI [उपमितिभवप्रपञ्चकथा सारोद्धार —देवेन्द्रसूरि ]

Ends

श्रुत्वैनामनुसुन्दरस्य च महीभर्तु कथामद्भुतां
भो भव्या शरण जिनागममिम यूय श्रयध्व सदा ।
यो(ये)नोच्चैर्गुरुकर्मका अपि जनादस्य प्रसादोदय (प्रसादादय)
निर्धूया(निर्धूय)ऽऽत्मभयनश्वरसुखा श्रेय श्रिय प्रापुत (प्रापुम)
॥ ६१५ ॥

इति श्रीचन्द्रसूरिशिष्यश्रीदेवेन्द्रसूरिविरचिते उपमितिभवप्रपञ्चकथासारोद्धारे पूर्वसूचितमील्लकवर्णनो नाम अष्टमः प्रस्तावः समाप्तः ॥

समाश्रितो यः शरणं क्षमाभृद्गणेन कर्माशनिपातभीत्या ।
अवारपारश्रियमादधानः स चन्द्रगच्छोऽस्ति भुवि प्रसिद्धः ॥ १ ॥
भव्यारविन्दप्रतिबोधहेतुरखण्डवृत्तः प्रतिषिद्धदोषः ।
श्रयन्नपूर्वेन्दुतुलामिह श्रीभद्रेश्वरो नाम बभूव सूरिः ॥ २ ॥
तत्पट्टपूर्वाचलचण्डरोचिरजायत श्रीहरिभद्रसूरिः ।
मुद न कस्मै रहितं विकल्या तपश्च वित्तं च तनोति यस्य ॥ ३ ॥
श्रीमानधाजायत शान्तिसूरिर्यतः समुद्रादिव शिष्यमेघाः ।
ज्ञानामृतं प्राप्य शुभोपदेशवृष्टया व्यधुः कस्य मनो न शस्यम् ॥४ ॥
ततो बभूवाभयदेवसूरिर्यदीयवाणी गुणरत्नहृद्या ।
मेध्या भरेन्दुलसिता विभाति वेलेव मध्यस्यजिनागमाब्धेः ॥ ५ ॥
प्रसन्नचन्द्रोऽथ बभूव सूरिर्वक्तु गुणान् यस्य नहि क्षमोऽभूत् ।
सहस्रवक्त्रोऽपि भुजङ्गराजस्ततो ह्रिया वैव रसातलेऽगात् ॥ ६ ॥
अथाजनि श्रीमुनिरत्नसूरिः स्वबुद्धिनिर्धूतसुरेन्द्रसूरिः ।
रचन्ति शास्त्राण्यखिलानि यस्य स्थिरोन्नते मानसरोहणाद्रौ ॥ ७ ॥
श्रीचन्द्रसूरिस्तु गुरुस्ततोऽभूत्प्रसन्नतालङ्कृतमस्तदोषम् ।
चित्तं च वाक्यं च वपुश्च यस्य क न प्रमोदात् पुलकं करोति ॥ ८ ॥
सूरिर्यशोदेव इति प्रसिद्धस्ततोऽभवत्पत्पदपङ्कजस्य ।
रजोभिरालिङ्गितमौलयोऽपि चित्रं पवित्राः प्रणता भवन्ति ॥ ९ ॥
तत्पाणिपद्मोल्लासितप्रतिष्ठः श्रीचन्द्रसूरिप्रभुशिष्यलेशः ।
देवेन्द्रसूरिः किमपीति सारोद्धारं चकारोपमिते कथायाः ॥ १० ॥
इतश्च शिष्यो गणधारिदेवानन्दस्य रत्नप्रभसूरिवृद्धे ।
बभूव सूरिः कनकप्रभाख्यो निधिर्गुणानामिह चन्द्रगच्छे ॥ ११ ॥
तदीयशिष्यः किल बालचन्द्रसूरेः कवीन्द्रादुदितप्रतिष्ठः ।
अशोधयद्बोधिविशुद्धयेऽमुं प्रद्युम्नसूरिर्विनयोपरुद्धः ॥ १२ ॥

यच्चान्यदप्यत्र निवेशित स्यादन्यादृश किञ्चन बुद्धिमान्द्यात् ।
अथ निबन्धोऽञ्जलिरस्ति सर्वं तत्साधु निवेशनीयम् ॥ १३ ॥

श्रीविक्रमादित्यनरेन्द्रकालादष्टानवत्यर्थेम १२९८ सख्यवर्षे ।
पुष्यार्कभृत्कार्त्तिककृष्णपष्ठया सपूर्णतामेष समाससाद ॥ १४ ॥

यावन्नौरिव भव्यतारणविधावास्ते भवाम्भोनिधौ
श्रीसिद्धेन कृता कथेयममार्हद्वाक्यकाष्ठोच्चयै ।
तावत्तद्गतसत्पदार्थनिचयस्योदञ्चनेऽसौ क्षमा
सारोद्धारकृतिः सदा तदनुगा नौकेव ससर्पतु ॥ १५ ॥

प्रत्यक्षर निरूप्यास्य ग्रन्थमान विनिश्चितम् ।
शतानि सप्तपञ्चाशत्त्रिंश ५७३० त्समधिकान्यहो ॥ १६ ॥

अङ्कतोऽपि श्लोक ५७३० ॥ उपमितिभवप्रपञ्चकथा ॥

---

**No. 590 Navyabrihatkshetrasamasa** by Somatilaka with the Avachuri by Gunaratnasuri [नव्यबृहत्क्षेत्रसमास —सावचूरि मू॰ मा॰ सोमतिलक अव॰ गुणरत्नसूरि]

*Begins:*

सिरिनिलयं केवलिणं अजितहवयण नमित्तु वीरजिण ।
नरखित्तविआरलव वुच्छामि सुआउ सपरहिअ ॥ १ ॥

Ends:

इअ नरखित्तविआरो सोमतिलयसूरिणा समासेणं ।
लिहिओ सपेरेसि हिऊ सोहेयव्वो सुअहरेहि ॥ २३ ॥

एष सर्वं गाथाः ॥ २८८ ॥ इति नव्यबृहत्क्षेत्रसमास ॥ फाल्गुनमासे त्रयोदश्या तपागच्छनायकभट्टारकप्रभुपरमगुरुश्रीश्रीरत्नशेखरसूरिशिष्यपुंगवपण्डितसत्यहंसगणिवाचनाचार्यपुरंदराणां विनेयेन हंसगणिना फल्हीग्रामवरेऽलेखि स्वपरोपकाराय ॥ स॰ १५११ वर्षे ॥

•भग्नपृष्टिकटिग्रीवं मध्यदृष्टि अधोमुखम् ।
कष्टेन लिखितं शास्त्रं यत्नेन परिपालयेत् ॥ १ ॥

Avachuri ends :

स्फूर्जद्गुणप्रकरवासितविष्टपानां
श्रीदेवसुन्दरमहत्तमसूरिराज्ञाम् ।
शिष्योऽवचूर्णिमकरोद्गुणरत्नसूरिः
संस्कारबोधविधये स्वपरार्थमेताम् ॥ १ ॥

श्रीवृद्धक्षेत्रसमाससत्के विलोक्य लघुबृहद्वृत्ती ।
श्रीज्ञानसागरसूरिकृताऽवचूर्णिर्विरचितेयम् ॥

इति श्रीसोमतिलकसूरिविरचितस्य नव्यबृहत्क्षेत्रसमासस्यातिगंभीरार्थस्य श्रीगुणरत्नसूरिकृतावचूर्णिः ॥

---

No. 609. Mahapurushacharitram, by MERUTUNGA [महापुरुषचरित्रम्—मेरुतुङ्गाचार्यः]-

Begins :

ओं नमः परमात्मने । श्रीगुरुभ्योनमः ॥

जयति स परमात्मा केवलज्ञानमूर्तिः
दलितनिखिलकर्मा शाश्वतानन्दमग्नः ।
हृदयकमलमन्तर्यस्सदालोक्यमानः
प्रवितरति मुमुक्षोर्मोक्षलक्ष्मीं प्रपन्नः ॥ १ ॥

श्रीऋषभनेमिशान्तिश्रीमत्पार्श्ववर्धमानानाम् ।
भवसहितान्यपि नूनं रचयिष्यन्तेऽत्र चरितानि ॥ २ ॥

शेषमहापुरुषाणामस्मिन्सूत्रे नु संगृहीतानाम् ।
तद्गुणमात्रग्रहणाद्रचयिष्यन्तेऽत्र चरितानि ॥ ३ ॥

श्रुतिमार्गगः प्राय उपदेशोगतागतैः ।
यदि विश्राम्यति श्रान्तः कस्यापि कृतिनो हृदि ॥ ४ ॥

तथाहि ।

ग्रन्थारम्भे इष्टदेवताप्रणिधानप्रधाना प्रेक्षावता प्रवृत्तिरित्यौचित्यात्तत्र प्रथमनमस्कारो यथा ।

प्रणिधाय परं ज्योतिर्नत्वा चन्द्रप्रभु ( प्रभं ) गुरुम् ।
उपदेशशतीं कुर्वे सुक्तमुक्ताफलस्रजम् ॥ १ ॥

स्पष्ट । अथ सर्वजिनंप्रणीतस्य चतुर्द्धाधर्मस्य दानमेवोत्तमं प्रथमं दृष्टान्तेनोपदिशन्नाह ।

दद्याद्दानं सुपात्राय़ोन्नतये सुकृती यथा ।
घृतदानान्मुनेरासीत्प्रथितः प्रथमो जिनः ॥ १ ॥

इति श्रीमेरुतुंगाचार्यविरचिते महापुरुषचरिते श्रीयुगादिजिनवर्णनो न म प्रथम सर्ग ॥

इति श्रीमेरुतुंगाचार्यविरचिते उपदेशाविवरणे महापुरुषचरिते सगरसुनमघरसनकुमारश्रीशान्तिनाथचरितमुनिसुव्रतश्रीरामचरितवर्णनो नाम द्वितीय सर्ग ॥

इति श्रीमेरुतुंगाचार्यविरचिते महापुरुषचरिते श्रीनेमीश्वरजीपार्श्वनाथपूर्वभवपहितचरितवर्णनो नाम तृतीय सर्ग ॥

इति श्रीमेरुतुंगाचार्यविरचिते उपदेशाविवृतरूपे महापुरुषचरिते चतुर्थ सर्ग ॥ संवत् १६४९ वर्षे प्रथमाषाढे श्रीजिनचन्द्रसूरिराज्ये वा० समयकलशगणिवराणा शिष्येण सुखनिधानगणिना लिपी च०

Ends

अथ सूत्रम् । प्रचुरेष्वपि शिष्येषु भक्तिमान रञ्जयेद् गुरुम् ।
वज्रस्वामी सूरिविद्या वज्रसेने यथा न्यधात् ॥ ९९ ॥

अथ कदाचित् श्रीवज्रस्वामी कफप्रादुर्भावेन नागरीयपखण्डकरणे नियोग्य थनाभोऽगात् सुखवस्त्रिकाप्रत्युपेक्षणक्षणे तद्रूपीठलुठितं वीक्ष्य प्रमादे संयमो न स्यात् । निष्कलङ्कं कथं च न । त च मानुषं जन्मजीवितं च निरर्थकम् । अथ द्वादशवार्षिके दुर्भिक्षेऽनदी स्ये सजाते शुद्धानुपाना-

प्राप्याऽनशनं चिकीर्षुः । श्रीवज्रस्वामी वज्रसेनमुनिं प्रत्याह यत्र लक्षेनैकेन एकस्थाली उत्तरति तत्र गत्वा स्थातव्यम् । अथ शेषमुनीन् प्रत्याह ।

सव्वथ संजमं संजमा उप्पाणमेव रक्खिज्जा ।
मुच्चइ अइवा याउ पुणोविसोहीन सेविरई ॥ १ ॥

अथ मुनयो गुरून् विज्ञापयामासुः ।

पिण्डं असो हयंतो अविरित्ती द्रस्थ ससउनस्ति ।
चारित्तं मिअसन्ते सव्वादिगुक्कानिररकया ॥ २ ॥

अतो वयममुं देहमपहातुमीहामहे इति तदनुमतो निःसीमसौभाग्यनिधिर्भगवान् वज्रसेनवर्जं पञ्चशतानि तपोधनानां क्षुल्लकमेकं तत्प्रामे मुतं परित्यज्य मुनीन् सह गृहीत्वा गिरिमारुरोह । स क्षुल्लकः प्रभाते कृतानशनः प्रथम स्वर्गं जगाम । अथ स तद्गुणे पूजार्थं सुरानागतो विलोक्य परिवारेण विज्ञता गुरवः । क्षुल्लकवृत्तान्तं कल्पितोपयोगा विज्ञापयामासुः । अथ तान् धाराधिरूढवैराग्यसाहस्रान् काचित् मिथ्यादृगूदेवता कल्पितमानुषीवेषा विविधानि भोग्यवस्तूनि उपनीय निमन्त्रितवती । भगवान् वज्रस्वामी तस्या अयमहं प्रीतिहेतुमवगम्य त गिरिं परिहृत्य प्रत्यासन्नं पर्वतान्तरमधिरुह्य तद्देवताया अनुज्ञापनार्थं कायोत्सर्गं कृत्वा सभक्तिकं तत्पर्वतदेवतया सेव्यमानः अनशनं प्रतिपाल्य स्वर्गं प्राप । अनेन महात्मना सह दमशमं पूर्वं तुर्यं संहननं व्यवच्छिन्नं महर्षीणां निर्वाणे तीर्थभूमिरिति रथारूढेण शक्रेण प्रदक्षिणीकृत इति स हि गिरिः रथावर्त्त इति पप्रथे । अथ वज्रस्वामिशिष्यश्रीवज्रसेनः सोपारे प्राप्तः गोचरचर्याकाले जिनदत्तस्य गृहमुपेतस्तेन ईश्वरीनाम्न्या तत्पत्न्या च ससंभ्रममुत्थाय प्रणतोऽस्या लक्ष्यमूल्यद्रव्योदनसिद्धाया स्थाल्यां विषं निक्षिप्य आगामिनि दिने एतावता द्रव्येणान्नस्याप्राप्ति विमृश्य सपुत्रोऽपि तदन्नमुपभुज्य निपद्यामाहे इति विज्ञप्तोऽवज्ञरनात् मरणान्निविश्य स स्वयमुपात्तभिक्षः पारणकं चकार । तान् सर्वान् दीक्षयाऽनुजग्राह । अतः प्रातः पञ्चशतेषु प्रवहणेषु धान्यपूर्णेषु समागतेषु सुभिक्षे संजाते सुखेन संयमं चन्द्रनागेन्द्रनिर्वृत्तिविद्याधर इत्याभिधानैश्चतुर्भिर्मुनिभिरुपास्यमानः सर्वेषामन्येषां च प्रतिबोधं यच्छन् प्रति-

पालयामास तेषां चतुर्णां चत्वारो गच्छा बभूवुः । अथोपदेशशतस्य समहमाह श्रीसर्वज्ञस्याज्ञापालनमेव समस्तोपदेशाना रहस्यं विमृश्य तथा कथंचित् चारित्र यतितव्यं यथा संसारे पुनर्नायाति । इति धर्मोपदेशशतकसूत्रस्य सर्वसंग्रहः संपूर्णः । श्री । इति श्रीमन्मेरुतुंगाचार्यविरचिते धर्मोपदेशशतकाविवरणे महापुरुषविरचिते पञ्चमः सर्गः ॥

प्रोन्मीलद्गूढमूलः सरलतरलसद्भूरिशाखाभिरामः
सच्छ्रीतिः साधुरत्नावलिदलपटलः कीर्तिदिव्यप्रसूनः ।
यच्छन् वाञ्छातिरिक्तान्यभिलषितान्यन्वहं ( लपतन्त्वह ) पुण्यभाजां
श्रीमन्नागेन्द्रगच्छो जगति विजयतां जंगमकल्पवृक्षः ॥ १ ॥

यत्प्रोक्तं हितशास्त्रगौरवभयाच्छ्रोतृवर्गस्य च
श्रोत्राणां कटुताकरं कुसमयस्फुर्त्तेयवाप्य च यत् ।
उत्सूत्र प्रबलप्रसादवशतः प्रोक्तं मया साधु यत्
तत्सर्वं श्रुतिमूर्तिरेष भगवान् साक्षाज्जिनः क्षामतु (क्षाम्यतु) ॥ २ ॥

इति श्रीग्रन्थस्य श्लोकसंख्या । प्र० १२७४ ॥ शुभ भवतु श्री ॥ संवत् १६४९ वर्षे अषाढमासे कृष्णपक्षे शनौ सिद्धियोगे । श्रीबृहत्खरतरगच्छे श्रीजिनचन्द्रसूरिराज्ये श्रीसागरसूरिशाखायां वाचनाचार्यधुर्यवर्यसाधुलालगणि तत् शिष्य वा० चारुधर्मगणि तत्शिष्यवाचनाचार्यधुर्यवर्यश्रीसमयकलशगणिगजेन्द्राणां तत्शिष्यमुख्यपं० सुखनिधानगणिना लिपी चक्रे अमरसरेऽकबरराज्ये संवत् १७७१ वर्षे श्रावणसुदि ८ दिने पण्डितश्रीवीरमसागरगणयो दिवं गताः । तेषां श्रेयोऽर्थे पण्डितदोलतिरामगणिना श्रीविक्रमपुरज्ञानरत्नकोशे इदं पुस्तकं प्रदत्तम् ।

---

No. 615 Yogabindu by Haribhadra, with a commentary [योगबिन्दु—सटीक मू॰ हरिभद्रसूरि]

Commentary begins

सद्योगचिन्तामणितोऽनणीयो येनाधिजिग्ये जगत पतित्वम् ।
स योगिवृन्दारकवृन्दवन्द्यो यतादयथानि घनं जिनो नः ॥ १ ॥

सुधाबिन्दाविवानन्दममन्दमुपाचिन्वत· ।
योगबिन्दो· समासेन वृत्तिरेषा विधीयते ॥ २ ॥

गुरूपदेशो न च तादृगस्ति मतिर्न वा काचिदुदाररूपा ।
तथापि योगप्रियतावशेन यत्नस्तदाभ्यासकृते यथेयम् ॥ ३ ॥

तस्य चेदमादिसूत्रं नत्वेत्यादिश्लोकद्वयम् ॥

Text begins :

नत्वाद्यन्तविनिर्मुक्तं देवं योगीन्द्रवन्दितम् ।
योगबिन्दु प्रवक्ष्यामि तत्त्वसिद्धये महोदयम् ॥ १ ॥

सर्वेषां योगशास्त्राणामविरोधेन तत्त्वतः ।
सन्नीत्या स्थापकं चैव मध्यस्थास्तद्विदः प्रति ॥ २ ॥

Text ends :

समुद्धृत्यार्जितं पुण्यं यदेतद् शुभयोगतः ।
भवान्ध्यविरहात्तेन जनः स्याद्योगलोचन· ॥

Commentary ends ·

योग एव लोचनमक्षि यस्य तथा विरह इति । इति च भगवत·[1] श्रीह-
रिभद्रसूरिः स्वप्रकरणाङ्कप्रद्योतक इति ॥

समाप्ता चेयं योगबिन्दुप्रकरणवृत्ति ॥

---

No. 618· Ruchitadandakastuti, by JINESVARA with commentary [रुचितदण्डकस्तुति सटीका मू॰ जिनेश्वरसूरि टी॰ पद्मराज ]·

Commentary begins .

श्रीनाभिजातं प्रणिपत्य भावतः श्रीसारदासौ च गुरुप्रभावतः ।
जिनेश्वरैः सूरिवरैर्विनिर्मितामर्थोपयाम्यद्भुतदण्डकस्तुतिम् ॥ १ ॥

Text begins :

रुचितरुचिमहामणिस्वर्णदुर्वर्णनिर्वृत्तपावित्र्यभृत् —

Commentary ends:

॥ ॥ इति रचितदण्डकस्तुतिव्याख्या ॥

खरतरगणगगनाङ्गणदिनेश्वरश्रीजिनेश्वरप्रमुखैः ।
चतुरचमत्कृतिजननी स्तुतिरेषा ज्यायसी विदधे ॥ १ ॥
तत्संतानेऽभूवन् भुवलयख्यातकीर्त्तयः क्रमशः ।
वादिद्विपपारीन्द्राः श्रीमज्जिनहंससूरीन्द्राः ॥ २ ॥
तेषां शिष्यधुरीणा अतिप्रवीणाः श्रुताब्धिपारीणाः ।
श्रीपुण्यसागरमहोपाध्यायाः संप्रति जयन्ति ॥ ३ ॥
तच्चरणाम्बुजरोलम्बवाचनाचार्यपद्मराजेन ।
तद्वृत्तिरियं विहिता यदनृतमिह तद्बुधैः शोध्यम् ॥ ४ ॥
पूज्यजिनचन्द्रसूरिषु वर्यगणैश्वर्यमादधानेषु ।
फलवर्द्धिकानगर्यां जलनिधियुगशशिकलावर्षे १६२४ ॥ ५ ॥

इति श्रीवृहज्जिनेश्वरसूरिकृतदण्डकस्तुतेर्वृत्तिः संपूर्णा ॥

---

No. 623. Vijayachandacharitram, by CHANDRAPRABHA-MAHATTARA [विजयचंदचरियं—चन्द्रप्रभमहत्तरः].

Begins:

सयलसुरासुरकिंनरविज्जाहरनरवरिंदथुअचलणं ।
जय सुवण्णसरीरं पणमह वीरं महावीरं ॥ १ ॥
कमलासननिसन्ना कमलमुही कमलगब्भसमवन्ना ।
भुवणजणजणियतोसा जिणवाणी नमह भत्तीए ॥ २ ॥
निसुणउ सुमणो तह दुज्जणो य दोस गुणगहणगयचित्तो ।
सिरिविजयचंदचरिए विविहं पूयाफलं भणिमो ॥ ३ ॥

Ends:

सिरिविजय- -महायरस सिरिअभयदेवसूरिस्स ।
सीसेण तस्स रइयं चंदप्पहमहयरेणेयं ॥ ९१ ॥

इय वित्थरराहियं चरियं सिरिविजयचंदकेवलिणो ।
गाहाछंदनिबद्धं भविआण विबोहणट्ठाए ॥ ६० ॥
दयावडचरनगरे रिसहजिणदस्स मंदिरे रइय ।
नियवीरदेवसीसस्स साहुणो तस्स वयणेण ॥ ६१ ॥
मुणिकरसकरकाले निनस्स सिरिविक्कमस्स वट्टंते ।
रइय फुडक्खरत्थ चंदप्पहमहयरेणेय ॥ ६२ ॥
जावज्जसो ससिधवलो धवलइ महिमंडलं जिणिंदाण ।
ताव इम जयउ जए चरियं विजयचंदस्स ॥ १०६३ ॥
॥ इति श्रीविजयचन्द्रकेवलीचरित्र समाप्तम् ॥

---

No 625 Viseshavasyakavritti by HEMACHANDRA [विशेषावश्यवृत्ति—हेमचन्द्र]

Ends

पूर्वं चाध्यवसानपर्यंते व्याख्यानगाथानाम् । ७८२३ उभय व्याख्यातगाथाना २६२३ शेषाणि तु भाष्यगाथाना चतुर्दशाधिकसप्तशतान्यतिदेशेनैव गतानि न तु व्याख्यातान्यतो नेह गणितानीत्येषा शिष्यहितानामविशेषावश्यकवृत्ति परिसमाप्ता ॥ ॥ ॥ इह गभीरापारजन्मजरामरणसलिलसचयसपूर्णो ॥ अनवरतताम्यन्महामोहावर्त्तभीमे विविधविश्रोतसिकावेलाव्यानिकरटरातिक्रमे । निसत्यकुविकल्पकल्लोलमालाकुले । प्रसरदज्ञानमहामेघदुर्दिनाधकारनिकुरुबभीषणे । अनेकापद्विद्युन्निपातसपातमहाभये । रागद्वेषदुर्वातसततिसजनितहृदयोत्कपे । अविश्रातसप्रज्वलितक्रोधाग्निप्रदीप्तवडवामुखे । अमानमानशैलस्खलनदुर्गोत्तुङ्गगमागमव्यतिकरे । मायावल्लीवितानगुच्छरसते । विभवसलिलातिदु पूरलोल्लहोदाविविधव्याधिसबधमत्स्यकच्छपपृष्ठपुच्छटाटोपप्राहनक्रादिप्रभु ( चु ) रजलचरसवरणसजनितविषमसचारे । शारीरमानसानतदु खप्रदापारससारवारानिधौ मा निमग्न विह्वल नि शरण दीनमवलोक्य कोपि करुणापरीतमानस सद्गुणगुरु— पुरुपप्रार्थदर्शनातिदृढमहाप्रतिष्ठान । अष्टादशशीलागसहस्रविचित्रफलक-

निविडघटनाविराजितं। सम्यक्ज्ञाननिर्यामकान्वितं। सुसाधुसंसर्गकायसूत्रनिविडबंधनबद्धम्। संवरकीलप्रभग्नानिःशेष श्रवद्वारं। सूत्रितसामायिकछेदोपस्थानीयभेदभिन्नरम्यभूमिकाद्वयम्। तदुपर्युपकल्पितसाधुसमाचारकरणमंडपं समंततो गुप्तित्रयप्रस-गुप्तं। असंख्यशुभाध्यवसायसंनद्धदुर्योधयोधसहस्रदुरवलोकम्। सर्वतो निवेशितसद्गुरूपदेशावल्किानिकुरुम्बम्।-व्यवस्थापितस्थिरतरातिसरलसद्बोध कूपस्तम्भम्। तद्विन्यस्तप्रकटशुभभावमयमहासितपटम्। तदग्रसमारूढप्रौढसदुपयोगपञ्जरदौवारिकम्। तदवद्वाप्रमादनं? गरनिकरसमायुक्तमित्यादि सर्वांगसंपूर्णतया प्रवणं चारित्रमयं महायानपात्रं समर्पयामास। भणितवांश्च भो भो महाभाग समधिरोह त्वमस्मिन् यानपात्रे समारूढश्चात्र। मदीयशिक्षां तु (कु) र्वाणस्त्वमक्षोभेणैव दुस्तरमप्यमुं भवजलाधिपारं यास्यसि निःशेषदुःखातिक्रान्तमनन्तसुखमयं शिवरत्नद्वीपं ततस्तद्वचनेनाश्वासिताहमारूढसूत्रसमर्पितं च मम तेन महापुरुषेग सद्भावनामञ्जूपायां प्राक्षिप्य शुभमनोनामकं महारत्नम्। अभिहितवतां प्रतिरक्षणीयमिद प्रयत्नतो भद्र। तिष्ठत्यस्मिन्महाप्रभावे शुभमनोरत्ने एतद्यानपात्र यथोक्तो नियामिकः कूपस्तम्भो यो-पञ्जर दौवारिकादिकं च सर्वं क्षेमेणावतिष्ठमानमभीष्टदेशं प्राप यथैतदभावे तु सर्वमेतत्प्रलयमुपयाति। अत एव तव पृष्टतः सर्वादारणैव तदपहरणार्थं लगिष्यन्ति ते मोहराजादयो दुष्टतस्करास्तेभ्यश्च त्वयेदमित्थमित्थं च रक्षणीयम्। सद्भावनामञ्जूपाङ्गना चाग्रेतनानां भङ्गं संभावयन् यान्यमूनीव तदङ्गानि तस्या नित्यादिशिक्षां प्रयच्छन् मयापि समं दूरदेशं मृत्वा ततोऽन्तर्हितः संजातः श्रुतश्चायं सर्वोऽपि व्यतिकरः प्रमादपरताभिधानां पल्लीं समाश्रितेन दुष्टतस्कराधिपतिना मोहराजेन। ततो रे रे तस्कराधमा हता वयं २ यतः केनाप्यस्मद्वैरिणा निजयानपात्रमारोप्यास्मदिस्यभूनं शिवरत्नद्वीपं नेतुमारब्धः सोऽकसंसारिजीवः स च न केवलं स्वयं चलित किन्त्वन्यानपि यथा दर्शनमात्मना सहानेकान्तर्यत्तिष्ठति। तद्यावदेतदस्मदीयसंसारनाटक सर्वशून्यं न करोति। तावद्धावधावदिति ब्रुवाणः ससंभ्रममुत्थाय दुर्बुद्धिनामिका महानावमारूढः कुवासनाभि-

धानतौकृन्दे निरुद्धाशेषतस्करनिकरसाहित एव प्रधानित सत्वर समागतश्च यानपात्रदेशम् । तत पूकृत पञ्जरदौवारिकेण भो भो समायाता एतास्तास्तस्करवेडिका प्रगुणीभवत यूय तत एतच्छ्रुत्वा निर्यामकोत्साहितास्तदुपदिष्टविधिनैव रणमण्डपमारूढा सञ्जीभूताश्चारित्रधर्मनृपतिसैन्ये ---पूर्वोक्तरूपा योद्धा गृहीतानि सर्वैरपि पञ्जरदौवारिकादिभिर्यथोचित जीवादितत्वचिन्तनादिरूपाणि नाराचादिप्रहरणानि । मोहराजेनाज्ञापितो मिथ्यादर्शनमन्त्री । उत्साहिता कषायचरटासूजित हास्यादिषट्कलुण्टाकवृन्दम् । पुरस्कृत पुरुषवेदादिपरिवृत काममहा तस्करव्यापारिता निद्रादय । प्रतारिताश्च दुर्दर्शनावरणादय । अग्रेसरीकृत रोगाद्यसाध्यवेदनीयसैन्यम् । प्रवर्त्तिता जरान्तरायादय । स्वयमपि च निजतनयरागकेसरिद्वेषगजेन्द्रादितलवर्गान्वितेन मोहचरटाधिपेन वेष्टित समन्ततोऽनन्तगुणपरिपाद्यायानपात्रम् । प्रहर्तुमारब्ध चाक्षत्रेण सर्वैरेव समकालम् । ततश्च सदागमसेनाधिपोत्साहितेन सम्यग्दर्शनमन्त्रिणा समाक्षिप्तो मिथ्यादर्शनमन्त्री । प्रशममार्दवादिमहायोधैरपि लीलयैव निरुद्धा । क्रोधादिकषायचरटा । वैराग्यब्रह्मव्रतादिमहासुभटैरपि दूरमुत्रासितो हास्यादिनिजतलवर्गानुगत काममहालुण्टाक । अप्रमादमहारथिनापि श्रुतोपयोगोद्यमादिनोच्चैस्ताडिता शिरासि निद्रातन्द्रादय । तदावरणक्षयोपशमवीरेणाप्यधरीकृताश्चक्षुर्दर्शनावरणादय । सद्धर्मानुष्ठानोद्दीपितसातोदयसैनिकेनापि विलक्षीकृत रोगाद्यसातवेदनीयसैन्यम् । पुण्योदयमहाबलवद्राजपुत्रेणापि नि प्रकृता जरान्तरायादय । एवमन्येषामप्यनन्ताना चारित्रधर्मराजसैनिकाना निजप्रतिपक्षेण सह महासमरसमर्दे प्रवृत्ते निज सैन्य किञ्चिन्नम्यमानमवलोक्य रे रे तस्कराधमा किमेतदारब्ध स्थिरीभूय लगत २ सर्वात्मनेति ब्रुवाणो महाचरटचक्रवर्त्ती ससैन्य एवारब्धो युगपत्प्रहर्त्तु केचित्पुनरीदृक्छलघातिनो मोहसैनिका । केनापि पक्षेण समारोहन्ति तद्यानपात्रम् । विप्रतारयितुमुपक्रमन्तेम -- सातिरणमण्डपस्यान्त प्रहरन्ति उन्नीभूता समाहत्य जर्ज्जरयन्ति सद्वासनामजूषाङ्गानि । ततो मया तस्य परमपुरुषस्योपदेश स्मृत्वा विरचय्य झटिति

